इति । तदसत्–अभावलौकिकप्रत्यक्षं प्रत्येव स्वतन्त्रतद्धेतुतायास्तैः स्वीकारात् संशय उपनीताभावकोटिभाने तादृशकारणविरहस्याकिञ्चित्करत्वात् ।

अथ सर्वत्र साध्यसन्देहदशायां तादृशप्रत्यक्षनिश्चयासंभवेपि कालान्तरीणनिश्चयजन्यसंस्कारतः स्मरणात्मकतादृशनिश्चयः संभवत्येवेति चेन्न । यस्य पुंसः प्रागपि कुत्रचित् साध्यनिश्चयो न जातस्तस्य सहचारसंशयसामग्र्या एवमपि दुरुपपादत्वात् ।

ननु साध्यांशे निर्द्धर्मितावच्छेदकं तदंशे निश्चयरूपं साध्यसामानाधिकरण्यज्ञानं सर्वत्र साध्यसंशयदशायामपि सुलभमेव धर्मितावच्छेदकावच्छिन्नधर्मिविषयताया एव संशयत्वघटकतया धर्मितावच्छेदकावच्छिन्नतद्विषयताया निश्चयत्वसंपादकत्वात् । न च धर्मितावच्छेदकप्रकारेण सकलधर्मिणामेव तदा भानसंभवात् धर्मिविषयताया धर्मितावच्छेदकानवच्छिन्नत्वं दुर्घटमिति वाच्यम् । एकज्ञाने धर्मितावच्छेदकावच्छिन्नतदनवच्छिन्नविषयतयोः सत्त्वे बाधकाभावादित्याशयेनाहास्तुवेति । सः–प्रतियोगितावच्छेदकीभूतसाध्यसामानाधिकरण्यान्वयप्रकारकोनिश्चयः,सर्वत्र साध्यसंशयदशायामपि पक्षे हेतुमत्तानिश्चयसत्त्वे हेतुत्वांशे निश्चयात्मकहेतुसामानाधिकरण्यज्ञानसत्त्वेन साध्ये हेतुसामानाधिकरण्याभावसंशयः सुलभ एवेत्याशयेनाह साध्ये इति । न तथापि हेत्वाभासत्वमित्यन्वयः । उक्तानुपसंहारिताया इति शेषः । अत्र हेतुः सामग्रीत्वेन प्रतिबन्धकतयेति । तज्ज्ञानस्येति शेषः । अन्यथा–प्रतिबन्धकसामग्र्यात्मकधीविषयस्यापि हेत्वाभासत्वे, व्यभिचरिताव्यभिचरितेत्यादिपंचकस्यैव साधारणान्वयः । तत्र च व्यभिचारिताऽव्यभिचारितादिचतुष्टयसाधारणद्रव्यत्वादिमत्त्वं हेतोः साधनवन्निःसाधनसाधारणतद्वत्त्वं पक्षस्य बोध्यम् । प्रथमद्वयं हेतौ व्याप्तिघटकदलयोः प्रत्येकाभावसंशायकम्, तृतीयं विशिष्टव्याप्त्यभावसंशायकम्, तुरीयं पक्षधर्मत्वसंशायकम्, पंचमं पक्षे साधनाभावसंशायकमिति भेदः । तस्यापि तादृशद्रव्यत्वादिमत्वस्यापि,इतरसाचिव्येन–विशेषादर्शनादिसहकारेण । तत्तन्निश्चयति । अव्यभिचारादिनिश्चयेत्यर्थः । प्रत्यक्षसामग्रीलौकिकप्रत्यक्षसामग्रीघटकविशेषणज्ञानादिविषयः, तादृशसामग्र्या अपि बलवद्विपरीतभानसामग्रीत्वेन पक्षादौ हेतुमत्ताज्ञानप्रतिबन्धक-

त्वादिति भावः। दूषणान्तरमाहापि चेति। साध्याभावसन्देहविषयमात्रवृत्तित्वमिति। तन्मात्रस्य व्यतिरेकव्याप्तिग्रहाविरोधित्वेपि विरोधवदन्वयव्याप्तिग्रहाविरोधित्वेन हेत्वाभासताया दुर्वारत्वादिति भावः। व्यतिरेकिणि-पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ, नियतविषयेन-पृथिव्यादिमात्रविषयेण, सपक्षे-निर्वहति, तथा च तत्राप्यनुपसंहारितापत्तिरिति भावः। इदमुपलक्षणम् असाधारण्येप्यतिप्रसङ्गो बोध्यः।

वस्तुतस्तु असाधारणेपि व्यतिरेकव्याप्तिग्रहेण व्यतिरेकिपदेनासाधारण्यस्य साक्षादेव लाभः। ननु साधारणादिव्यावर्त्तनायैव सन्देहविषयताव्याप्यव्यतिरेकसत्ताप्यनुपसंहारित्वे निवेश्यतेत्यत आह दूषकतेति। अन्वयव्याप्तिग्रहप्रतिबन्धलक्षणहेत्वाभासताप्रयोजकसत्वे साध्यसन्देहविषयमात्रत्वांशमात्रस्यासाधारण्यं न हेत्वाभासताविरोधीत्यर्थः। नन्वस्तु तदेवानुपसंहारित्वं व्यतिरेकिणस्तथात्वेपि व्यतिरेकव्याप्त्युपादानान्नानुमातविरोध इत्यत आह नवेति॥

( टी० ) व्याप्तिग्रहप्रतिबन्धलक्षणैकप्रयोजनकत्वेन साधारण्यादीनामेकहेत्वाभासत्वम्। साधारणेन व्यापकत्वस्याव्यभिचारित्वस्य वा असाधारणेन सामानाधिकरण्यस्यानुपसंहारिणा च व्यतिरेकव्याप्तिग्रहस्य प्रतिरोधात्। लक्षणन्तु विशिष्टसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया व्याप्तिग्रहविरोधितावच्छेदकं रूपम्। व्याप्तीश्चान्वयतो व्यतिरेकतश्च नानारूपाः प्रातिस्विकरूपेण उपादाय तावद्ग्राही ग्रहो वाच्यः। साध्यसाधनयोरप्रसिद्धेरसिद्धिभेदस्य वारणायाविरोधिन इत्यन्तम्। साध्यसाधनभेदेन व्यभिचारभेदाद्यत्र विशिष्टं साध्यं साधनं वाऽप्रसिद्धं तत्र तद्ग्रहविरोधित्वं नोपादेयम्। एवमन्यत्रापि। शेषं हेत्वाभासलक्षणोक्तदिशावसेयम्। व्यर्थविशेषणत्वन्तु न व्याप्तिग्रहविरोधीति वक्ष्यते। साध्याव्यभिचरितसामानाधिकरण्यविरहस्य बहिर्भावनीयत्वे पुनरन्वयव्याप्तौ व्यापकत्वमव्यभिचारितत्वं वा सामानाधिकरण्यञ्च

विशकलितं युगपदुपादेयम् । तत्र साधारणत्वं वर्णितम् । असाधारणत्वन्तु सपक्षव्यावृत्तत्वं, सपक्षश्च साध्यवान्, तद्व्यावृत्तत्वन्तद्वृत्तित्वग्रहविरोधित्वम् । प्रकृतसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया तदुभयसामानाधिकरण्यग्रहविरोधितावच्छेदकमिति तु निष्कर्षः । संगृह्यते चेत्थं साध्यादेः साधनवदवृत्तित्वादिकम् ।

( गा० ) व्यतिरेकव्याप्तिग्रहविरोधिनो हेत्वाभासान्तरताविरहात्तस्य व्यभिचारमध्य एवान्तर्भावस्यौचित्यात्तस्यैवानुपसंहारित्वरूपतां स्वातन्त्र्येण व्यवस्थापयितुं भूमिकामाह व्याप्तिग्रहेति । एकहेत्वाभासत्वं–व्यभिचाररूपैकहेत्वाभासान्तर्गतत्वम् व्यापकताज्ञानस्यानुमितिहेतुतया निराकृतत्वादाहाव्यभिचारत्वस्य वेति । सामानाधिकरण्यस्य–साध्यसामानाधिकरण्यस्य, साध्यासामानाधिकरण्यमेवासाधारण्यं न तु मणिकारसंमतं साध्यव्यापकीभूताभावप्रतियोगित्वं तस्यानुमितौ साक्षादेव विरोधित्वेन सत्प्रतिपक्षादिवद्व्यभिचारान्यहेत्वाभासतया एव युक्तत्वादित्याशयः ।

असाधारण्यस्य साध्यासामानाधिकरण्यरूपत्वेऽनुमितिविरोधित्वादिघटितमूलोक्तसामान्यलक्षणस्याव्याप्त्यातिव्याप्तिकरम्बितत्वात् स्वयं सामान्यलक्षणमाह लक्षणं त्विति । ज्ञानस्य विषयतया–विषयीभूय, विरोधितावच्छेदकं–प्रतिबन्धकतायामवच्छेदकं प्रतिबन्धकतावच्छेदकीभूतज्ञानवृत्तिविषयताकत्वमिति तु पर्यवसितम् । एवमग्रेपि सर्वत्र बोध्यम् । अनुपसंहारित्वसंग्रहायाह व्याप्तीश्चेति । केनापि रूपेण व्याप्तीनामननुगमे तज्ज्ञानसामान्यविरोधित्वं न साधारण्यादेरित्यत आह प्रातिस्विकेति । असिद्धिभेदस्येत्यनेनालक्ष्यत्वं दर्शितम । असिद्धिभेदो व्याप्यत्वासिद्धिः । साध्यसाधनयोरवृत्तित्वं साध्यसाधनसामानाधिकरण्यग्रहविरोधितया असाधारण्यमेवेति तद्व्यावृत्तेरनपेक्षिततया साध्यादिमत्त्वपर्यन्तानानुधावनम् । ननु धूमवान् वह्नेरित्यादिस्थलीयसाधारण्याद्यसंग्रहप्रसङ्गः तत्र विशिष्टसाध्यादिग्रहविरोध्यप्रसिद्धेः । न च विशिष्टसाध्यादिग्रहविरोधिनी कामिनीजिज्ञासैव प्रसिद्धेति तदन्यज्ञाननिष्ठव्याप्तिग्रहविरोधितावच्छेदकरूपवत्त्वमादाय लक्षणसमन्वयः संभवतीति वाच्यम् । एवमपि यत्र

कामिन्यादेरेव साध्यता हेतुता वा तत्र साध्यादिग्रहविरोध्यप्रसिद्धेर्दुर्वारत्वादित्यत आह साध्यसाधनभेदेनेति। साध्यतावच्छेदकादिभेदेनेत्यर्थः। नोपादेयमिति। तत्र साध्याप्रसिद्ध्यादिदोषाप्रसिद्ध्या तदनुपादानेऽप्यतिप्रसङ्गानवकाशादिति भावः। तथाच दर्शितस्थले विशिष्टसाध्यादिग्रहविरोध्यप्रसिद्ध्याऽव्याप्तेर्नावकाश इत्याशयः। यदि स्वाप्रतिबध्यविशिष्टसाध्यादिग्रहकत्वमाविरोध्यन्तार्थस्तदाऽविरोधिन इत्यन्तस्योपादानेपि नाऽव्याप्तिरित्यपि बोध्यम्। अन्यत्रापि वक्ष्यमाणासाधारणादिलक्षणेपि, शेषमवच्छेदकत्वनिर्वचनं विशिष्टान्तराघटितत्वनिवेशनादिकम्।

ननु नीलधूमादित्यादौ हेतुतावच्छेदकस्य साध्यसामानाधिकरण्यानवच्छेदकत्वरूपव्यर्थविशेषणतायां व्याप्यत्वासिद्धिप्रभेदत्वेन व्याप्तिग्रहविरोधिन्यामतिव्याप्तिरित्यत आह व्यर्थविशेषणं त्विति। वक्ष्यत इति। असिद्धिग्रन्थ इति शेषः। व्याप्त्यभावेतिव्याप्तिमाशङ्क्याह साध्याव्यभिचरितेति। स्वमते व्यापकताज्ञानस्यानुमित्यहेतुत्वेन तद्विरोधिनोऽव्यापकतादेः साक्षाज्जनकज्ञानाविरोधित्वेन न हेत्वाभासत्वमिति स्वमताभिप्रायेणाहाव्यभिचरितत्वं वेति। साध्याभाववदवृत्तित्वं वेत्यर्थः। युगपदिति। एकज्ञानविशेषणतयेत्यर्थः। हेतौ साध्याव्यभिचारावगाहित्वे सति तत्र सामानाधिकरण्यावगाहि यज्ज्ञानं तद्विरोधित्वं निवेश्यम्, न तु अव्यभिचारविशिष्टसामानाधिकरण्यावगाहित्वमिति समुदायार्थः। तथाच विशिष्टाभावग्रहस्य विशिष्टवत्ताज्ञानमात्रविरोधितया तत्सत्त्वेपि साध्याव्यभिचारी साध्यसमानाधिकरणश्च हेतुरिति विशकलितदलद्वयावगाहिज्ञानोदयान्न विशिष्टाभावेऽतिव्याप्तिरिति भावः। साध्याप्रसिद्ध्यादिर्व्यभिचारानात्मकस्यापि व्याप्यत्वासिद्धेः सत्त्वाद्दर्शितविशिष्टाभावस्यासिद्धिव्यभिचारोभयरूपत्वेपि न क्षतिरित्यत्रानिर्भरसूचनाय बहिर्भावनीयत्वे पुनरित्युक्तम्।

अथानुमितौ सामानाधिकरण्यसम्बन्धेनाव्यभिचारविशिष्टं यत् सामानाधिकरण्यं तत्प्रकारकहेतुज्ञानत्वेन न हेतुता सामानाधिकरण्यविशिष्टाव्यभिचारज्ञानत्वेनापि विनिगमनाविरहेण हेतुताप्रसङ्गात् हेतोर्व्यभिचारज्ञानकालेपि हेतुविशेषणतापन्नसामानाधिकरण्यांशे विशेषणतयाऽव्यभिचारभाने बाधकाभावेनानुमित्यपत्तेश्च। न चो-

भयविधविशिष्टज्ञानस्यानुमितिहेतुत्वोपगमाद्धेतौ व्यभिचारग्रहदशायां तत्र सामानाधिकरण्यविशिष्टाव्यभिचारग्रहाभावान्नानुमित्यापत्तिरिति वाच्यम् । उभयविधव्याप्तिज्ञानसत्त्व एवानुमितिरित्युपगमस्यानुभवविरोधेनासंभवात्, तृणारणिमणिन्यायेनैवोपदर्शितोभयविधविशिष्टज्ञानहेतुतायाः स्वीकरणीयत्वाद्व्यभिचारग्रहकाले तत्र भावविशिष्टसामानाधिकरण्यग्रहाधीनानुमित्यापत्तेर्दुर्वारत्वात्, तथा चाव्यभिचारसामानाधिकरण्योभयावच्छिन्नहेतुविषयताशालिज्ञानत्वेनैवानुमितिहेतुता वाच्या तादृशज्ञाने प्रत्येकाभावज्ञानमेव विरोधि न त्वेकविशिष्टापराभावज्ञानं प्रतियोगितावच्छेदकविशिष्टप्रतियोगिमत्ताबुद्धेरेकाभावधीप्रतिबध्यत्वादिति विशिष्टाभावस्य हेत्वाभासत्वमेव दुर्घटं क्वान्तर्भावबहिर्भावविचार इति चेन्न । सामानाधिकरण्यसम्बन्धेनैकविशिष्टापरस्याभावग्रहो यथा तादृशविशिष्टप्रकारकग्रहविरोधी तथा युगपद्विशेषणविशेष्योभयधर्मावच्छिन्नतया एकधर्मिग्रहेऽप्युभयाभावग्रहवद्विरोध्युभयाभावसमशीलतादृशाभावग्रहदशायां सामानाधिकरण्येनैकविशिष्टापरग्रहसमशीलधर्मद्वयवत्ताग्रहानुत्पादस्यानुभवसिद्धतया प्रत्याख्यातुमशक्यत्वात् । अत एवासिद्धिग्रन्थे व्याप्तिविशिष्टपक्षधर्मताविरहस्य विशिष्टपरामर्शविरोधितया दोषत्वं स्वयं व्यवस्थापयिष्यते न हि विशिष्टपरामर्शस्य एकविशिष्टापरावगाहित्वं कारणतावच्छेदकं लाघवेनानुभवबलेन च हेतौ व्याप्तिपक्षधर्मत्वोभयावगाहिज्ञानस्यैवानुमितिहेतुत्वोपगमात् । न चैवं विशकलिताव्यभिचारसामानाधिकरण्योभयावगाहिधीविरोधित्वोपादानेनापि न विशिष्टाभाववारणसंभव इति वाच्यम् । विशकलितोभयावगाहित्वं हि न मिथो विशेष्यविशेषणभावानापन्नोभयावगाहित्वम्, अपि तु धर्मिनिष्ठविभिन्नविषयतानिरूपितोभयविषयताप्रतियोगित्वम् । तच्च साध्याव्यभिचारी हेतुः साध्यसमानाधिकरणो हेतुरिति समूहालंबनबुद्धौ, तस्याश्च न विशिष्टाभावधीप्रतिबध्यता अपि तु उभयविषयतानिरूपितैकविषयताशालिबुद्धेरेवेति वर्णितं साधारणग्रन्थे ।

असाधारण्यस्य सत्प्रतिपक्षोत्थापकतया दूषकतया मणिकारसम्मततया तदनुयायिना पूर्वं साध्यव्यापकीभूताभावप्रतियोगित्वमसाधारण्यमिति व्याख्यातम् तच्च स्वानुमतमित्यन्यथा तन्निर्वक्ति

असाधारणत्वं त्विति। पक्षव्यावृत्तत्वमिति। यद्यप्येतदप्यनुपदं विवरणीयमिति तदेवासाधारणत्वविवरणमस्तु किमन्तरा तद्विवरणेन, तथापि सपक्षव्यावृत्तत्वमसाधारणत्वमिति प्राचीनप्रवादाविरुद्धत्वं स्वमतस्य दर्शयितुमेतद्विवरणम्। निश्चितसाध्यवद्व्यावृत्तत्वस्य व्याप्तिग्रहं प्रति साक्षादविरोधितायाः प्राग्व्यवस्थापितत्वात् निश्चयांशपरित्यागेन सपक्षपदं व्याचष्टे सपक्षश्चेति। तद्व्यावृत्तत्वं यदि तदवृत्तित्वं तदा साध्यादिनिष्ठहेत्वसामानाधिकरण्यसाध्यवदवृत्तित्वाविशिष्टसाधनादेरसङ्ग्रह इति तत्साधारण्याय व्याचष्टे तद्व्यावृत्तत्वमिति। साध्याप्रसिद्ध्यादेरपि विशिष्टसाध्यादिसामानाधिकरण्यग्रहविरोधितयाऽतिप्रसङ्गवारणाय विशिष्टसाध्यादिग्रहाविरोधित्वमधिकं प्रवेशयन् विरोधिपदस्य प्रतिबन्धकपरताभ्रमनिराकरणाय तदर्थं विवृणोति प्रकृतत्यादिना। प्रकृतत्वं साध्यतावच्छेदकादिवैशिष्ट्यम्। तदुभयेति। विशिष्टसाध्यसाधनोभयेत्यर्थः। इत्थं–सामानाधिकरण्यग्रहविरोधितात्मकानुगमकप्रकारेण॥

(दी०) चाक्षुषस्पर्शवान् स्पार्शनशब्दवत्त्वादित्यादौ विशेष्ययोरसामानाधिकरण्यञ्च। बाधासिद्धिभेदस्य च साध्यसाधनयोरवृत्तित्वस्यैतत्साङ्कर्येऽपि न क्षतिः। इदमेव च मणिकृतां विरुद्धत्वम्। इत्थञ्च तदीयमसाधारणत्वमेव विरुद्धत्वमिति। यत्र च धर्मिणि यो धर्मो यादृशो हेत्वाभासः तद्व्याप्यमपि तद्विशेषोऽन्तरेण प्रकरणसमन्तद्व्याप्यञ्च,पृथगुपदेशादविरोधाच्च।अनुपसंहारित्वञ्च विशिष्टसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया व्यतिरेकव्याप्तिग्रहविरोधितावच्छेदकरूपवत्त्वम्।तादृशञ्च साध्यादेरत्यन्ताभावाप्रतियोगित्वादिकम्। वह्न्यभावाभात्वेन वह्नेर्धूमाभाववद्वृत्तित्वज्ञानं वह्न्यभावस्य धूमाभावव्यापकताज्ञानं कदाचिद्विरुन्ध्यादपि न तु वह्नित्वेनेति नातिप्रसङ्गः। केवलान्वयिनि तत्सम्भवेऽपि अन्वयव्याप्त्युपादानेनानुमितिप्रतिरोध इति दिक्॥

इति अनुपसंहारिदीधितिः॥

ननु विशिष्टसाध्यसाधनसामानाधिकरण्यग्रहत्वावच्छिन्नानिरूपिता विरोधिता समूहालम्बनविशेषविरोधिताऽव्यावर्त्तनायावश्यं प्रवेश्यते तत्र चावच्छिन्नत्वं स्वरूपसम्बन्धात्मकमेव निवेश्यते न त्वन्यूनवृत्तित्वं गौरवात्तथाच विशिष्टसाध्यसाधनग्रहाविरोधित्वनिवेशनमनर्थकं साध्याप्रसिद्ध्यादिग्रहप्रतिबध्यताया विशिष्टसाध्यादिग्रहत्वेनैवावच्छिन्नत्वादित्यत आह चाक्षुषस्पर्शेति । विशेष्ययोः–स्पर्शशब्दयोः, परस्परासामानाधिकरण्यं संगृह्यत इत्यनेनान्वयः । तथाच स्वरूपसम्बन्धरूपावच्छिन्नत्वनिवेशे तत्राव्याप्तिः तादृशाविरोधिज्ञानप्रतिबध्यतावच्छेदककोटौ साध्यताद्यवच्छेदकचाक्षुषत्वादिविषयत्वाप्रवेशेन विशिष्टसाध्यादिसामानाधिकरण्यग्रहत्वावच्छिन्नाविरोधितायास्तत्रासत्वादित्यन्यूनवृत्तित्वरूपमेव तन्निवेश्यम्, तथाच तत्स्थलीयसाध्याप्रसिद्ध्यादिग्रहप्रतिबध्यताया अपि विशिष्टसाध्यादिसामानाधिकरण्यग्रहत्वान्यूनवृत्तित्वात् तत्रातिप्रसङ्गवारणाय विशिष्टसाध्यादिग्रहाविरोधित्वनिवेशनमावश्यकमिति भावः ।

ननु साध्यस्यावृत्तित्वे बाधरूपे साधनस्य वाऽवृत्तित्वे स्वरूपासिद्ध्यात्मकेऽतिव्याप्तिः तद्ग्रहस्यापि साध्यवत्तादिग्रहविरोधितया तद्घटितोभयसामानाधिकरण्यग्रहविरोधित्वादित्याशङ्कां तयोर्लक्ष्यतास्वीकारेण निराकरोति बाधेति । एतत्सांकर्य्येपि–असाधारण्यरूपत्वेपि । न क्षतिरिति । अन्यादृशस्यापि बाधादेः प्रसिद्ध्या स्वातन्त्र्येण तत्परिगणनोपपत्तेरिति भावः ।

ननु साधनादेः साध्यासामानाधिकरण्यादिकं विरोध एव तस्य कथमसाधारण्यतोपगम इत्यत आह इदमिति । मणिकृत एव इदं विरुद्धत्वमनुमतं न तु ममेत्यर्थः । नन्वेवं भवतां को विरोध इत्याकांक्षायामाह इत्थं चेति । तदीयं–मणिकारीयं, साध्यव्यापकाभावप्रतियोगित्वरूपमसाधारणत्वम् ।

ननु साधनादेः साध्यासामानाधिकरण्यवत्तस्य तद्व्याप्यवत्त्वमप्युभयसामानाधिकरण्यग्रहविरोधीति तत्रोक्तलक्षणातिव्याप्तिरित्याशंकां लक्ष्यताप्रदर्शनेन निराकरोति यत्र चेति । प्रकरणसमं–पक्षनिष्ठसाध्याभावादिव्याप्यम् । तद्व्याप्यं–पक्षनिष्ठसाध्याभावादिव्याप्यव्याप्यम् । तस्य बाधसत्प्रतिपक्षविशेषणत्वाभावादिति शेषः । तत्र हेतुमाह पृथगिति । पक्षनिष्ठसाध्याभावादिव्याप्यस्य सत्प्र-

तिपक्षतया स्वतन्त्रपरिगणनात्तादृशस्य साध्यत्वाज्ञानविरोधिधीविषयत्वेन हेत्वाभासताविरहाच्चेत्यर्थः । व्यतिरेकव्याप्तिग्रहेति। हेत्वभावत्वावच्छिन्नधर्मिकसाध्याभावव्यापकताग्रहेत्यर्थः। साध्यादेरित्यादिना साधनस्य साधनाभावस्य च परिग्रहः । अत्यन्ताभावाप्रतियोगित्वेनादिपदग्राह्यसाधनस्याप्यन्वयः। अप्रतियोगित्वादिना साध्याभावाव्यापकत्वपरिग्रहः। तस्य च साधनाभावेन सम्बन्धः।

अथाभावाप्रतियोगित्वधीरभावप्रतियोगित्वप्रकारकं ज्ञानं प्रत्येव विरोधिनी न तु तदप्रकारकं साध्याभावव्यापको हेत्वभाव इत्यादिज्ञानं प्रति ग्राह्याभावानवगाहित्वात् । न चैतादृशज्ञानेपि संसर्गतयाऽभावप्रतियोगित्वभानादभावाप्रतियोगित्वं ग्राह्याभाव एवेति वाच्यम्। अभावांशे विशेषणीभवतः साध्यादेरनुयोगितया एव संसर्गतया प्रतियोगितायास्तत्राभानात् । प्रतियोगितानिरूपकत्वावच्छिन्नैवानुयोगिता सम्बन्धो न तु केवला प्रतियोगित्वानुयोगित्वयोः समानवित्तिवेद्यतायाः सिद्धान्तसिद्धत्वादिति चेत् । एवमप्यभावप्रतियोगितात्वेन प्रतियोगिताया ग्राह्यताविरहात्तद्रूपावच्छिन्नाभावस्य विरोधितानुपपत्तिः ।

यत्तु–अभावे अनुयोगितासम्बन्धावच्छिन्नसाध्याद्यभावस्यैव दोषतया विवक्षणम्–तदपि न, वाच्यत्वादिसाध्यहेतुकेपि संयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकस्य द्वित्वाद्यवच्छिन्नप्रतियोगिताकस्य चाभावस्यानुयोगितासम्बन्धेन साध्यादिसम्बन्धित्वादभावत्वावच्छेदेन तत्सम्बन्धावच्छिन्नसाध्याद्यभाववत्त्वाप्रसिद्धेः । अभावत्वसामानाधिकरण्यमात्रेण तद्वत्ताधियश्च अभावत्वसामानाधिकरण्यमात्रेण साध्यादिप्रकारकव्यतिरेकव्याप्तिग्रहाविरोधितया तस्य दोषत्वायोगात् । स्वरूपादिसम्बन्धावच्छिन्नवाच्यत्वत्वाद्यवच्छिन्नप्रतियोगितानिरूपितानुयोगितासम्बन्धस्य चाप्रसिद्ध्या तादृशसम्बन्धावच्छिन्नाभावोप्यप्रसिद्ध इति न तादृशस्य दोषतोपगमसम्भवः । साध्यताद्यवच्छेदकस्य स्वावच्छिन्नसम्बन्धविशेषावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावोऽभावांशे तादृशसम्बन्धेन प्रतियोगिविशेषणतापन्नसाध्यतावच्छेदकादिप्रकारकव्यतिरेकव्याप्तिग्रहविरोधितयाऽनुपसंहारित्वमित्यपि न सार्वत्रिकं विशेषणान्तरानवच्छिन्नत्वादेर्यत्र साध्यता-

द्यवच्छेदकता तत्र स्वरूपतस्तत्प्रकारकव्यतिरेकव्याप्तिबुद्धेरेव हेतुतया तत्र तदभावप्रकारकज्ञानस्य नियमेन तदंशे प्रतियोगितावच्छेदकज्ञानत्वत्वादिप्रकारतया अविरोधित्वात् प्रतियोगितावच्छेदकप्रकारकप्रतियोगिमत्ताबुद्धेरेव समानप्रकारकतया अभावग्रहप्रतिबध्यत्वात् वृत्त्यनियामकसम्बन्धस्य संसर्गाभावप्रतियोगितानवच्छेदकतया तादृशसम्बन्धावच्छिन्नाभावाप्रसिद्धेश्च । एतेन तत्सम्बन्धेन तत्प्रकारकबुद्धौ समानधर्मिकतत्सम्बन्धावच्छिन्नतदभाववत्ताबुद्धिवत् तद्धर्मस्य तेन सम्बन्धेन असम्बद्धत्वग्रहस्यापि प्रतिबन्धकत्वमानुभविकम् । अत एव साध्यादेरवृत्तित्वस्य बाधादिप्रभेदतोक्तिरपि सङ्गच्छते । एवं च साध्यादेरत्यन्ताभावाप्रतियोगित्वादिकमिति यथाश्रुतस्यैव सङ्गतिरित्यप्ययुक्तम्-केवलान्वयिन्यपि ज्ञित्वाद्यवच्छिन्नाभावप्रतियोगित्वेसत्त्वेन तन्निष्ठतदप्रतियोगित्वासिद्धेः । स्वरूपादिसम्बन्धावच्छिन्नवाच्यत्वत्वाद्यवच्छिन्नप्रतियोगितया अप्रसिद्ध्या तदभावस्याप्रसिद्धेः । साध्यतावच्छेदकसम्बन्धविशेषावच्छिन्नप्रतियोगितानवच्छेदकत्वमनुपसंहारित्वमित्यपि स्वरूपतो ज्ञानत्वादिसाध्यतावच्छेदकस्थले न सम्भवति निर्विशेषणकज्ञानत्वादिविषयकव्याप्तिग्रहे ज्ञानत्वत्वादिप्रकारेणासम्बद्धत्वग्रहस्यासमानप्रकारकतयाऽविरोधित्वात् । साध्यतावच्छेदकावच्छेदेन वर्त्तमानः साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वाभावोऽनुपसंहारित्वमिति प्रगल्भानुमतमननुमतमेव दीधितिकृता व्याप्तिवादे निराकृतत्वात् ।

अत्राहुः विशिष्टबुद्धौ विशेष्ये प्रकाराभावग्रहवद्विशिष्टसंसर्गकबुद्धौ संसर्गे संसर्गतावच्छेदकाभावग्रहोऽपि विरोधी संसर्गविशेषावच्छिन्नविषयताया एव ग्राह्याभावधीप्रतिबध्यतावच्छेदकत्वात् विशिष्टसंसर्गकबोधस्थले संसर्गतावच्छेदकीयवैशिष्ट्यस्यापि संसर्गतान्तःपातिसंसर्गतया संसर्गतावच्छेदकविषयताया अपि संसर्गावच्छिन्नत्वात् । एवं च वाच्यत्वत्वाद्यवच्छिन्नत्वस्वरूपसम्बन्धावच्छिन्नत्वोभयविशेषितप्रतियोगितासंसर्गके वाच्यत्वाभावव्यापको हेत्वभाव इति ज्ञाने प्रतियोगितात्वावच्छेदेन तदुभयाभावग्रहस्य विरोधितया तद्विषयतादृशाभावोऽनुपसंहारित्वमिति विवक्षितम् । अधिकमन्यत्रानुसन्धेयम् ।

ननूक्तलक्षणस्य हेतुनिष्ठसाध्याभाववद्वृत्तित्वरूपसाधारण्येऽति-

व्याप्तिः तज्ज्ञानस्यापि हेत्वभावप्रतियोगिकाभावे हेतोः साध्याभावसामानाधिकरण्यावगाहितया हेत्वभावे साध्याभावसमानाधिकरणाभावाप्रतियोगित्वज्ञानविरोधित्वात् साध्याभावसमानाधिकरणत्वेन भासमानेऽभावे हेत्वभावप्रतियोगिकत्वग्रहस्य तुल्यवित्तिवेद्यतया हेत्वभावे तादृशाभावप्रतियोगित्वावगाहनादित्यभिमानं निराकरोति वह्न्यभावभावात्वेनेति ।कदाचिद्विरुन्ध्यादिति । सम्भावनायां लिङ् । तुल्यवित्तिवेद्यतायां मानाभावात् भावे वा ।इहापि असमानप्रकारकतया उक्तज्ञानस्य व्यापकताज्ञानविरोधिताया विचारासहत्वाद्दानिर्भरः । न तु वान्हित्वेनेति । तेन रूपेण भाने हेत्वभावांशे प्रतियोगिताया असंस्पर्शादिति भावः । नातिप्रसङ्ग इति । हेतुतावच्छेदकावच्छिन्नस्य साध्याभाववद्वृत्तिताया एव साधारणत्वात् उक्तबुद्धेर्विरोधितायाः प्रामाणिकत्वे हेत्वभावाभावत्वावच्छिन्नस्य साध्याभाववद्वृत्तिताया लक्ष्यत्वादेवेति भावः । तत्सम्भवेपि-अभावाप्रतियोगित्वरूपानुपसंहारित्वसम्भवेपि, अन्वयव्याप्त्युपादानेन-अन्वयव्याप्तिधीसम्भवेन, नानुमितिप्रतिरोधः—विशेषदर्शिनोपि नानुमित्यनुत्पादः । न चैवमपि केवलान्वयिसाध्यकहेतोराभासतया तत्प्रयोक्तुर्निग्रहप्रसङ्ग इति वाच्यम् । अभिमतसाधकताविघटकाभासस्यैव निग्रहप्रयोजकतया अन्वयिमुद्रया गमकता यत्राभिमता तत्र निग्रहायोगात् व्यतिरेकिप्रयोगे निग्रहस्येष्टत्वात् इति ॥

इति श्रीगदाधरभट्टाचार्यचक्रवर्तिविरचितायां अनुमानगादाधर्यामनुपसंहारिप्रकरणम् ।



अथानुमानगादाधर्यां

# विरुद्धप्रकरणम् ।

(चि०) विरुद्धो न साध्याभावव्याप्यः, संयोगसाधके सद्धेतावतिव्याप्तेः। नापि साध्यवन्निष्ठात्यन्ताभावप्रतियोगिव्याप्यत्वं तत्त्वम्, इदं द्रव्यं गुणवत्त्वादित्यादौ संयोगादिव्याप्येऽतिव्याप्तेः। किन्तु साध्यासमानाधिकरणसाध्याभावव्याप्यः साध्यवदन्योन्याभावव्याप्यो वा। साध्याभावत्वं साध्यविरोधित्वमात्रं भावाभावसाधारणम्, तेनाभावे साध्येऽभावाभावस्य भावत्वेऽपि नाव्याप्तिः। अभावाभावोऽभावप्रतियोगिनिरूप्यत्वेन भावाभिन्न एव वा। न च भावत्वेनैवोपपत्तौ किमधिकेनेति वाच्यम्। बाधकं विनाऽभावप्रतीतेः प्रमात्वात्, अन्यथा अत्यन्ताभावाऽन्योन्याभावयोरप्रसिद्धिः।

(दी०) साध्यविरोधित्वं साध्यप्रतियोगिकत्वम्। एकदेशिमतेनाह अभावेत्यादि। न च भावस्य स्वाभावविरहात्मकत्वरूपप्रतियोगित्वग्राहिधर्म्मिग्राहकमानबाधः, प्रतियोगित्वस्य सम्बन्धान्तरत्वात्। स्वस्याभावस्येत्यत्र षष्ठ्यर्थस्य तस्यावश्याभ्युपेयत्वात्। विरहत्वञ्च नाभावत्वं, बाधात्। नापि तद्ग्रहप्रतिबन्धकग्रहविषयत्वम्, अविरोधात् प्रत्यक्षेण दुर्ग्रहत्वाच्च। न चानवस्था, अभावस्य स्वाभावाभावत्वे बाधकाभावात्। भावस्य तथात्वे बाधकमाह बाधकं विनेत्यादि। अभावप्रतीतेः-अभावत्वविशि-

ष्टप्रतीतेः । अभावत्वञ्च न भावभिन्नत्वं प्रथमं दुर्ग्रहत्वात्, किन्त्वयमभावो न भाव इति प्रतीतिसाक्षिकं पदार्थान्तरम्, तच्चानुपस्थितं निर्विकल्पकोपस्थितं वा प्रकारः, अभावत्वञ्चासमवेतत्वान्न जातिः । अन्यथेति । अनतिप्रसक्तैरधिकरणैस्तद्धर्मैर्वा अभावव्यवहारोपपत्तेरिति भावः । लाघवादबाधिताभावत्वविशिष्टप्रत्ययबलाच्चातिरिक्तैकाभावसिद्धिस्तुल्यैव । एतेनाभावत्वं सप्रतियोगिकत्वं तच्चाननुगतानामप्यावश्यकानां प्रतियोगिनां कल्प्यते इत्यपास्तम् । संयोगादिसाधारण्याच्च ॥

(गा०)साध्याभावत्वं साध्यविरोधित्वमात्रमित्यत्र मूले साध्यविरोधित्वं यदि साध्यासामानाधिकरण्यं तदा साध्यसमानाधिकरणपदोपादानवैयर्थ्यमिति तद्व्याचष्टे साध्येति । साध्यासमानाधिकरणत्वं साध्यानधिकरणवृत्तित्वं न तु साध्याधिकरणावृत्तित्वमतो न साध्याभावपदोपादानवैयर्थ्यम् । अधिकरणभेदेन संयोगाद्यभावभेदमते इदं लक्षणम्, अतो न संयोगी द्रव्यत्वादित्यादावतिव्याप्तिः । साध्यसमानाधिकरणपदं प्रतियोगिव्यधिकरण्याविशिष्टार्थकमित्यपि केचित् । तन्न, साध्याभावप्रतियोगित्वेन साध्योपादानस्य शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वात् । मूलस्थमात्रपदेन भावव्यावर्त्तकाभावत्वनिवेशव्यवच्छेदः ।

अभावाभावस्य अभावप्रतियोगिकस्य भावत्वेऽपि भावतयाऽभावत्वातिरेकेऽपि अभावत्वानिवेशाभ्युपगमेनाभावाभाव इत्यादिकल्पान्तराभिधानस्य सिद्धान्तत्वभ्रमनिरासायाह दीधितौ एकदेशीति । ननु घटाभावो नास्तीत्यादिप्रतीत्या घटाभावाभावत्वविशिष्टधर्मो सिध्यति तस्यातिरिक्तत्वं च सैव विरुणद्धि तस्या एव घटादिरूपभावे स्वाभावाभावत्वरूपस्वाभावप्रतियोगित्वावगाहित्वादित्याशंकते न चेति । संबन्धान्तरत्वात्—अभावत्वान्यसम्बन्धत्वात् । स च सम्बन्धः स्वरूपादतिरिक्तोऽनतिरिक्तो वत्युभयथैव न क्षतिरिति भावः । बाधादित्यस्य भाव इत्यादि । अविरोधादिति । अभावाभावस्यातिरिक्तत्ववादिनामपि प्रतियोगिमत्ताज्ञानस्याभावग्रहप्रतिबन्धकत्वोपगमादिति भावः । प्रत्यक्षेणेति । तद्ग्रहप्रतिबन्धकग्रहविषयत्वस्य ज्ञानघटितत्वेन चक्षुरयोग्यत्वादित्त

भावः । अनवस्था—अतिरिक्तानामभावानामप्यतिरिक्ताभावकल्पनायामनन्ताभावकल्पनागौरवम् । बाधकाभावादिति । भावस्यैवाभावत्वकल्पनयोगादिति भावः ।

मूले भावस्यैवेति । घटाभावो नास्तीति प्रतीतेर्घटादिरूपभावविषयकत्वेनैवेत्यर्थः । किमधिकेन—घटाद्यतिरिक्तविषयकत्वेन, यथातिरिक्तस्यापि तेजोऽभावादेरिदन्त्वादिविशिष्टस्य न प्रतियोगिग्रहसापेक्षग्रहत्वं किन्त्वभावत्वावच्छिन्नस्यैव तथा घटत्वादिविशिष्टस्य प्रतियोग्यनिरूप्यत्वेपि घटादेरभावत्वेन प्रतियोगिनिरूप्यत्वे बाधकविरहादिति भावः । अभावाभावप्रतीतेः प्रमात्वाभिधानस्य भावेऽभावप्रतियोगिकत्वबोधकताहशप्रतीत्यप्रमात्वप्रसंजनसूचकतां स्फुटीकरोति दीधितौ भावस्येति । भावस्याभावप्रतियोगिकत्वेपि घटाभावो नास्तीत्यादिप्रतीतेरभावादिवैशिष्ट्यांशे प्रमात्वसंभवादभावरूपप्रतियोगिधर्मितावच्छेदकताप्रभाभावत्वांशे तत्र प्रमात्वानुपपत्तिलाभाय व्याचष्टेऽभावेति । अभावत्वं भाववैधर्म्यं तत्र भावे न संभवतीति तद्विशिष्टवाचकनशुल्लेखिन्या घटाभावो नास्तीत्यादिप्रतीतेस्तेन रूपेण घटाद्यवगाहित्वे तदंशे प्रमात्वे व्याहन्येतेति मूलाभिप्रायः । अभावत्वं यदि भावभिन्नत्वं तदा भावे तदप्रसक्त्या भावेप्यभावत्वस्वीकार इत्यर्थकान्यथेतिमूलानुत्थितिरतोऽभावत्वस्य तदन्यत्वं व्यवस्थापयति अभावत्वं चेति । प्रथमं—भावत्वादिप्रकारकज्ञानानुत्पत्तिदशायाम् । अभावो न भाव इति । एतावता तस्य भावभिन्नत्वरूपता निराकृता तथासत्यभावो न भाव इत्यनयोः समानार्थकतया विषयभेदाधीनद्विधाभिलापानुपपत्तेः ।

ननु तथाप्यभावत्वस्य निर्विकल्पकाऽवेद्यतायाः सिद्धान्तसिद्धत्वाद्विशेषणज्ञानविरहेण प्रथमं तत्प्रकारकप्रत्यक्षानुपपत्तिरित्यत आह तच्चेति । अनुपस्थितमिति । विशिष्टबुद्धौ विशेषणज्ञानहेतुताया विशेषणभेदेन भिन्नतया अभावत्वविशिष्टबुद्धौ उक्तज्ञानहेतुत्वाकल्पनादित्यभिप्रायः । ननु केवलप्रमेयत्वादिना अभावत्वादिप्रकारकोपनीतभानदशायां स्वरूपतोऽभावत्वप्रकारतानियत्यधारणाय स्वरूपतस्तत्प्रकारकबुद्धौ लौकिकान्यत्वं कार्यतावच्छेदककोटावनिवेश्यैव स्वरूपतस्तद्विषयकज्ञानत्वेन हेतुता कल्प्यते लाघवात्, तथाच घटो नास्तीत्यादिलौकिकप्रत्यक्षपूर्वकालेपि स्वरूपतस्तद्विषयकज्ञान-

मपेक्षितमित्याशयेनाह निर्विकल्पकोपस्थितमिति। तथा चाभावत्वस्य निर्विकल्पकावेद्यत्वप्रवादो भावभिन्नत्वरूपाभावत्वमते एव, तस्य पदार्थान्तरत्वपक्षे तु निर्विकल्पकवेद्यत्वमिष्टमेवेति भावः। नन्वेवमभावत्वस्य नित्यत्वे सत्यनेकव्यक्तिवृत्तितया जातित्वापत्तिरित्यत आह अभावत्वञ्चेति।

इदं तु बोध्यम्। अभावत्वमनुयोगिताख्यः प्रतियोगिनिरूपितः सम्बन्धविशेषः, स च प्रतियोग्यादिभेदभिन्न एवेत्यनुगमकधर्मान्तरप्रकारेणैव तस्य नास्तीति बुद्धौ प्रकारता ससम्बन्धिकतया च तस्य प्रतियोग्युपरागेणैव भानं निर्विकल्पकवेद्यता चानुगमकधर्मस्यैव। प्रपंचितं चैतदस्माभिरधस्तात्।

अधिकरणस्याभावरूपत्वे अभावाधिकरणत्वानुपपत्तेरतस्तद्धर्मेणैति। अभावव्यवहारोपपत्तेरिति। भावेऽभावाभावत्वस्वीकारे भावाभावत्वस्यापि तत्र सम्भवादिति भावः। प्रतिबन्दिमात्रस्यानुत्तरतया युक्तिं दर्शयति लाघवादिति। अनन्तधर्मिष्वभावत्वकल्पनापेक्षया एकत्र तत्कल्पन इत्यादिः। घटत्वाद्यभावाभावस्यातिरिक्तत्वे ईदृशयुक्त्यसम्भवाद्भावो नाभाव इति प्रतीतेर्दुरपन्हवतया अभावत्वं भावव्यावृत्तमेवेति दर्शितयुक्त्यैव निर्भरं दर्शयति अबाधितेति। प्रमात्मकेत्यर्थः। एतेन-क्लृप्तधर्मिणां बहुत्वस्य धर्मकल्पनायामबाधकत्वेऽभावमात्रासिद्धिप्रसङ्गेन। संयोगादिसाधारण्याञ्चेत्यस्य सप्रतियोगिकत्वस्येत्यादिः। तथाच सप्रतियोगिकत्वस्य नास्तीति प्रतीतिविषयत्वे घटसंयोगादिमत्यपि घटो नास्तीति प्रतीतिः स्यादिति भावः।

अत्र सिद्धान्तानुसारिणः। अभावत्वं भावाभावसाधारणमेव नास्तीति प्रत्ययनियामकम्। यदि भावो नाभाव इति प्रत्ययः प्रामाणिकः तदा भावव्यावृत्तमप्यभावत्वं तादृशप्रत्ययनियामकतया स्वीक्रियताम्, न तु तदेव नास्तीति प्रत्ययनियामकं तथासत्यनन्ताभावकल्पनया गौरवात् भावाभावसाधारणैकधर्मस्यैव लाघवेन नास्तीति प्रत्ययनियामकतया कल्पनौचित्यात्।

यत्तु-अनन्तघटादीनां घटाद्यभावाभावत्वकल्पने गौरवाल्लाघवेनातिरिक्तैकैकाभावे तत्कल्पनमुचितमिति। तत्रेदं प्रतिभाति-घटाभावाभावत्वं घटाभावनिरूपितोऽनुयोगिताविशेषः, स च घटनिष्ठ-

घटाभावीयप्रतियोगितातो नातिरिच्यते । सा चानन्तघटेषु क्लृप्तैव । न चैवमत्र घटाभावप्रतियोगी अत्र घटाभावाभाव इति प्रतीत्योरविशेषापत्तिः, प्रतियोगितानुयोगितास्वरूपविभिन्नधर्मावगाहनेनैव तद्विशेषात् । "अभावविरहात्मकत्वं वस्तुनः प्रतियोगिते"ति प्रवादविरुद्धश्चायं पन्थाः । घटादेः संयोगादिसम्बन्धस्यैव संयोगादिसम्बन्धावच्छिन्नस्वाभावाभावत्वविशिष्टनिरूपितत्वं स्वीक्रियते न तु समवायादेरतो न कपालादौ संयोगादिसम्बन्धावच्छिन्नघटाभावो नास्तीत्यादिप्रत्ययप्रसङ्ग इत्यलं पल्लवेन ॥

( चि० ) अथ साध्यहेत्वोर्विरोधे पक्षे साध्यसत्त्वे हेत्वसिद्धिः, हेतुसत्त्वे साध्याभावसिद्धौ बाधः । न च प्रमाणान्तरेण साध्याभावसिद्धौ बाधो न हेतुत्वेनेति वाच्यम् । विशेषणवैयर्थ्यादिति चेन्न ।

हेतोः पक्षे साध्याभावबाधानुपस्थापनेऽपि प्रथमोपस्थितविरोधस्यैव उपजीव्यत्वेन दोषत्वात् ।

ननु साध्यभावसम्बन्धो व्यभिचार एव दोषो न तु तन्नियतत्वमपि, गौरवात् असाधकत्वे व्यर्थत्वाच्च । न च साध्यासहचरितस्य साध्याभावसहचरितस्य वा गमकत्वभ्रमरूपायामशक्तौ विशेषोऽस्ति, येनाशक्तिविशेषोन्नायकतया न व्यर्थविशेषणता । न चानैकान्तिकसामान्यलक्षणे विपक्षगामित्वं न विशेषणम् असाधारणाव्याप्तेः, साधारणन्तु सपक्षवृत्तित्वसहितमिति वाच्यम् । विपक्षगामित्वस्यैव साधारणत्वात् अधिकस्य व्यर्थत्वात् । न च विरुद्धं व्यावर्त्त्यम्, विपक्षगामित्वेनात्रैव तदन्तर्भावात् ।

अथानैकान्तिके विपक्षसम्बन्धेनैव दूषकताबीजम्, असाधारणाव्याप्तेः, न च तत्रान्यदेव बीजम्,

हेत्वाभासाधिक्यापत्तेरिति चेत् । अस्तु तावदेवम्, तथापि साधारणे विरुद्धप्रवेशो वज्रलेप एव ।

अन्ये तु विरुद्धलक्षणे न व्यर्थत्वं साधारणस्य व्यवच्छेद्यत्वात्, नाप्यसाधकतानुमितौ एतस्यापि व्याप्यत्वात्, नीलधूमादौ च व्याप्तिरस्त्येवेति न स्वार्थानुमाने दोषः, परस्य तु व्यर्थत्वमधिकम्, न च विरुद्धत्वादित्यत्र शब्दाधिक्यमिति ।

तन्न । अर्थो हि लिङ्गम्, न च व्यभिचारावारकविशेषणावच्छेदेनापि व्याप्तिर्गौरवादिति वक्ष्यते । न चार्थानुगत्या व्यर्थत्वेऽपि विरुद्धत्वादित्यत्र उद्भावनाशक्यत्वम्, आवश्यकतद्विवेचने तदुद्भावनस्य शक्यत्वादिति हेतुद्वयोपन्यासे चाधिकं प्रथमेन द्वितीयस्य कृतकर्त्तव्यताया दुष्टिबीजत्वात् । न च नीलधूमादित्यादौ विशिष्टकर्त्तव्यमन्येन केनापि कृतम् । धूमवत्त्वादित्यनेन कृतमिति चेन्न । तथानुपन्यासात्, अन्यथा नीलानन्वयापत्तेः ।

अपरे तु साध्यानवगतसहचारः साध्याभावसहचारी विरुद्धः । अन्यथा पृथिव्यां मेयत्वेनेतरभेदानुमानं न विरुद्धं स्यात् साध्याभावाव्याप्यत्वात् । न च तत्साधारणम्, सपक्षासत्त्वात् । न च साध्यसहचाराज्ञानदशायां साधारणातिव्याप्तिः, तदा तस्यापि विरुद्धत्वादिति प्राहुः ।

तन्न । विपक्षगामित्वमात्रं दूषकमित्युक्तत्वात् । अत एव व्यभिचरितो व्यतिरेक्यनैकान्तिक एव । नापि साध्याभावसाधकत्वं तत्प्रमापकत्वं वा, साध्याभावस-

म्बन्धबुद्धिं विना तदज्ञानात् । नापि साध्यवदन्यत्वव्याप्यत्वम्, व्याप्यत्वविवेचने व्यर्थविशेषणत्वात् । नापि स्वव्यापकाभावप्रतियोगिसाध्यकत्वम्, साध्याभावस्य हेतुव्यापकत्वप्रतीतौ हेतुसाध्याभावसम्बन्धभानस्यावश्यकत्वात् ॥

( दी० ) गमकत्वभ्रमेति । व्यभिचारिण्यव्यभिचारमात्रे विरुद्धे च समानाधिकरण्यांशेऽपि भ्रम इति । अशक्तौ विशेष इति । दूषकतायां तुल्यत्वेऽपि निग्रहस्थानत्वेन विशेषाद्भेदेनोपन्यासः । अत एवानैकान्तिकसामान्यलक्षणे साधारणलक्षणे च विरोधवारकं विशेषणम् छलजात्योर्निग्रहस्थानविशेषनिरनुयोज्यानुयोगविशेषत्ववदेतस्यानैकान्तिकविशेषसाधारणविशेषत्वेऽप्यदोषो वेति पुनराकरानुसारी पन्थाः ।

नापीत्यादि । व्यापकत्वं व्याप्यव्यापकसामानाधिकरण्यघटितं न वा ? आद्ये साध्याभावस्येति । द्वितीये तु नाभासत्वमविरोधात् ॥

(गा०)साधारणविरुद्धयोर्गमकत्वभ्रमकृपाशक्तौ न कश्चिद्विशेष इति मूलोक्तं दूषयति व्यभिचारिणीत्यादिना । अव्यभिचारमात्र इति भ्रम इत्यग्रिमेणान्वयः । मात्रपदेन साध्यसामानाधिकरण्यभ्रमव्यवच्छेदः । सामानाधिकरण्यांशेपि इत्यपिना अव्यभिचारसमुच्चयः । नन्वेवमप्यनुमितिविरोधिरूपमुभयोरपि साध्याभावसामानाधिकरण्यमेकमेवेति साधारणविरुद्धयोः पृथक्परिगणनमसङ्गतमित्यत आह दूषकतायामिति । अनुमित्यनुपधानप्रयोजकरूपभेदविरहेपीत्यर्थः । निग्रहस्थानत्वेन विशेषादिति । निग्रहविशेषप्रयोजकत्वेनानैकान्तिकबहिर्भावादित्यर्थः । भेदेनोपन्यासः–विरुद्धस्य स्वातन्त्र्येण परिगणनम् । अत एव–उक्तयुक्त्या विरुद्धस्यानैकान्तिकविशेषबहिर्भूतत्वादेव ।

विरुद्धस्यानैकान्तिकलक्षणाक्रान्तत्वेपि स्वातन्त्र्येण तद्विभजनं सङ्गमयति छलजात्योरिति । छलजात्योः पदार्थविभाजकनिग्रहस्थान-

त्वाक्रान्तत्वेऽपि यथा पदार्थेषु स्वतन्त्रविभजनमविरुद्धं तथा विरुद्ध-स्यानैकान्तिकविशेषविशेषतया अनैकान्तिकत्वरूपहेत्वाभासविभा-जकरूपाक्रान्तत्वेऽपि हेत्वाभासेषु स्वतन्त्रविभजनमविरुद्धमित्यर्थः ।

मूले विरुद्धलक्षण इति । विरुद्धपक्षेतरभेदानुमान इत्यर्थः । न व्यर्थत्वं न नियमांशस्य व्यर्थत्वम् ।

हेतुमन्निष्ठाभावाप्रतियोगित्वरूपायाः साध्याभावनिष्ठहेतुव्याप-कताया हेतुसाध्याभावसामानाधिकरण्याघटिततया तद्घटितविरो-धज्ञाने साधारण्यभानस्यावश्यकत्वाभिधानं मूलकृतो न सङ्गच्छत इति तत्सङ्गमनाय वितर्कयति व्यापकत्वमिति । अविरोधित्वादि-ति । ग्राह्याभावाद्यनवगाहने तज्ज्ञानस्य व्याप्तिज्ञानाद्यप्रतिबन्धक-त्वादित्यर्थः ।

इति विरुद्धपूर्वपक्षग्रन्थः ॥



( चि० ) उच्यते । साध्यव्यापकाभावप्रतियोगि-त्वं विरुद्धत्वम् । न च प्रतियोगिनोरनन्वये भासमान ए-व तदभावयोर्व्याप्तिग्रहः, भिन्नग्राहकसामग्रीकत्वात् अन्यथा व्यतिरेकिविलयापत्तेः ।

यद्वा वृत्तिमतः साध्यवदवृत्तित्वं साध्यवद्वृत्ति-त्वानधिकरणत्वं साध्यासमानाधिकरणधर्म्मत्वं सा-ध्यवद्वृत्तित्वानधिकरणधर्म्मत्वं वा तत्त्वम् । न च व्य-तिरेक्यतिव्याप्तिः । तत्र साध्याप्रसिद्ध्या तथाज्ञानवि-रहात् । असाधारणे च सङ्कर एव, अनेनापि रूपेण तस्य दोषत्वात् । न च साध्यवद्वृत्तित्वे सति वृत्तिमत्त्वज्ञानात् साध्याभाववद्गामित्वज्ञानमावश्यकं तेन विना सा-ध्यवदवृत्तित्वाज्ञानादिति वाच्यम् । उपजीव्यत्वेन भि-न्नत्वात्, उपजीव्यत्वेऽपि साध्यवति न वर्त्तत इति ज्ञा-

नं स्वतोदूषकमिति चेन्न। असहचारज्ञानस्य विरोधितया व्याप्तिग्रहप्रतिबन्धकत्वात् , व्यभिचाराज्ञानविरोधित्वेन व्यभिचारज्ञानवत् ।

( दी० ) साध्येत्यादि । हेत्वभावस्य साध्यवन्निष्ठाभावाप्रतियोगित्वज्ञानं वस्तुतस्तत्प्रतियोगिकाभावस्य हेतोः साध्यसामानाधिकरण्यग्रहं विरुणद्धीत्यभिप्रायेणेदम् ।

यदि च तदभावाभावत्वेनासामानाधिकरण्यग्रहेऽपि तत्त्वेन सामानाधिकरण्यग्रहो न विरुध्यत इति भाव्यते तदाह यद्वेत्यादि । वृत्तिमत इति धर्मेति च पक्षधर्मत्वाविरोधित्वप्रदर्शकं न तु विशेषकम् , दूषकतायामनुपयोगादव्याप्तिकरत्वाच्च । वृत्तिविशेषसूचनाय वा तत् , तेन समवायेन हेतुतायां धूमे नाव्याप्तिः । आद्ययोः साध्यवद्वृत्तित्वतदधिकरणत्वाभावौ चरमयोश्च साध्यवद्वृत्तितत्त्वाधिकरणभेदावर्थाविति भेदः । ज्ञानातिप्रसक्तिं निरस्यति न चेत्यादिना । तेनेत्यादि । साध्याभाववद्वृत्तित्वज्ञानं विना वृत्तिमत्त्वविशिष्टसाध्यवद्वृत्तित्वज्ञानापर्यवसानादित्यर्थः । असहचारेति । सहचारः सामानाधिकरण्यम् । व्यभिचारेति । व्यभिचारो न ज्ञायते यस्मात्तद्व्यभिचाराज्ञानमव्यभिचारज्ञानम् । तदयमर्थः- अव्यभिचरितसामानाधिकरण्यरूपाया व्याप्तेरव्यभिचारांशग्रहाविरोधिग्रहविषयतया यथा व्यभिचारो हेत्वाभासस्तथा सामानाधिकरण्यांशग्रहविरोधिग्रहविषयतया विरोधोऽपीति ।

( गा० ) ननु हेतौ साध्यव्यापकीभूताभावप्रतियोगित्वज्ञानस्य व्याप्तिज्ञानादौ ग्राह्याभावाद्यनवगाहितया प्रतिबन्धकत्वं न संभवतीति कथं हेतुनिष्ठतादृशप्रतियोगित्वस्य विरोधरूपतया सिद्धान्तप्रणयनमित्यत आह हेत्वभावस्येति । तत्प्रतियोगिकेति । हेत्वभावप्रतियोगिकेत्यर्थः । हेत्वभावाभावत्वेन भासमान एव सामानाधिकरण्यग्रहस्तदभावे तुल्यवित्तिवेद्यतया साध्यसमानाधिकरणाभावप्र-

तियोगित्वमवगाहत इति तत्र तादृशप्रतियोगित्वाभावरूपव्यापकताग्रहप्रतिबध्यता न तु हेतुतावच्छेदकरूपेण भासमाने साध्यसामानाधिकरण्यग्रह इत्यरुचेरनुपदं वक्ष्यमाणतया अभिप्रायेणेति ।

यदि चेत्यनन्तरं हेत्वभावे साध्यव्यापकताग्रहदशायामिति पूरणीयम् । तदभावेति । हेत्वभावेत्यर्थः । असामानाधिकरण्यग्रहेपीति । सामानाधिकरण्यग्रहासंभवेपि साध्यव्यापकत्वं साध्यासमानाधिकरणस्वभावकत्वरूपं यदि विवक्ष्यते तदा पूरणं विनैव असामानाधिकरण्यग्रहेपि इत्यस्यासामानाधिकरण्यग्रहदशायामिति यथाश्रुतार्थकतयैव च संगतिर्बोध्या । तत्त्वेन—हेतुतावच्छेदकरूपेण, अवृत्तिहेतोर्विरुद्धत्वस्यावृत्तितायाः विरोधरूपतायाश्चेष्टत्वाद्वृत्तिमत इति धर्मेति च व्यर्थमित्यत आह वृत्तीति । पक्षधर्मत्वाविरोधित्वप्रदर्शकमिति । एतद्दर्शनं च स्वरूपासिद्धिवैलक्षण्यस्य विरोधे लाभायेति ध्येयम् । विशेषकं—विरोधशरीरप्रविष्टार्थकं, दूषकतायां—प्रतिबन्धकतायाम् । अनुपयोगित्वात्—तदर्थविषयताया अनुपयोगित्वात्, अव्याप्तिकरत्वात्—अवृत्तिविरुद्धासंग्रहप्रयोजकत्वात् । वृत्तिविशेषेति । येन सम्बन्धेन विरुद्धत्वमभिमतं तत्संबन्धावच्छिन्नसाध्यवद्वृत्तित्वनिवेशलाभायेत्यर्थः । तन्निवेशनप्रयोजनमाह तेनेति । लक्षणचतुष्टयस्य भेदं स्फुटयति आद्ययोरिति । अभावावीति । अत्यन्ताभावावीत्यर्थः । पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ व्यतिरेकिणि साध्यवद्वृत्तित्वसत्त्वाद्व्यतिव्याप्तिर्न संभवतीत्याशयेनाह ज्ञानातिप्रसक्तिमिति । हेतुमति साध्यवत्त्वाग्रहेण तत्र साध्यवदवृत्तित्वग्रहसंभवादिति भावः । असाधारणे शब्दो नित्यः शब्दत्वादित्यादौ वस्त्वतिव्याप्तिशंकां लक्ष्यतां स्वीकृत्य निराकुरुते मूले असाधारणे चेति । संकर एवेति । विरोधस्य दोषान्तरसामानाधिकरण्यमिष्टमेवेत्यर्थः । अनेन—विरुद्धत्वेन, तस्य—असाधारणहेतोः, दोषत्वात्—दुष्टत्वे क्षतिविरहात् । साध्याभाववद्वृत्तित्वज्ञानाभावस्य साध्यवदवृत्तित्वाज्ञानप्रयोजकत्वं न संभवति कार्याभावस्य कारणव्यतिरेकाप्रयोजकत्वादिति तेन विनेत्यादिमूलासंगतिरिति तदन्यथा व्याख्यामुपादत्ते दीधितौ तेनेत्यादीति । वृत्तिमत्त्वेति । वृत्तिमत्त्वविशिष्टसाध्यवदवृत्तित्वरूपहेतुज्ञानघटितसाध्याभाववद्वृत्तित्वानुमितिसामग्र्याः फलोपहितत्वानिर्वाहादित्यर्थः । तथाच सामग्र्याः फ-

लोपधाननियमानुरोधात् तज्ज्ञानस्यावश्यकत्वमिति भावः ।

मूले उपजीव्यत्वेन भिन्नत्वादिति । व्यभिचारज्ञानोपजीव्यत्वेन विरोधस्यापि पृथग्दोषताया आवश्यकत्वादित्यर्थः । न स्वतो दूषकमितीति । उपाधिरिव न हेत्वाभास इति शेषः । व्याप्तिग्रहप्रतिबन्धकत्वादित्यस्य स्वतोपीत्यादिः । व्यभिचाराज्ञानविरोधित्वेनेति मूलस्य व्यभिचारज्ञानाभावविरुद्धत्वेनेत्यर्थो न संभवति–तावता व्याप्तिज्ञानप्रतिबन्धकत्वालाभादित्यन्यथा तद्व्याचष्टे दीधितौ व्यभिचारेणेति । व्याप्तेर्व्यभिचारसामानाधिकरण्यघटितत्वमभिप्राय तत्सद्भावविरोधिनो ज्ञानस्य व्याप्तिज्ञानप्रतिबन्धकतां स्फुटीकुर्वन् तद्विषयस्य हेत्वाभासताया निष्प्रत्यूहत्वं दर्शयति तदयमर्थ इत्यादिना ।

( चि० ) ननु विरुद्धस्य स्वार्थानुमानदोषत्वेऽपि परार्थानुमानेऽपार्थकत्वम् अयोग्यताज्ञानेन निश्चितानन्वयादिति चेन्न । अयोग्यताज्ञानस्य विरुद्धत्वज्ञानोपजीवकत्वेन तस्यैव दोषत्वात् बाधेऽप्येवम् । स चायं विधिसाधने त्रिविधः—साक्षात्साध्याभावव्याप्यत्वात् साध्यव्यापकाभावव्याप्यत्वात् साध्यव्यापकविरुद्धोपलम्भात् । यथा धूमवानयं योग्यधूमवत्तया अनुपलभ्यमानत्वात् निरग्निकत्वात् जलाशयत्वात् । न च सर्वत्र साध्यव्यापकविरुद्धोपलम्भ इति न त्रैविध्यम् । एतदज्ञानेऽपि साध्याभावतद्व्यापकाभावव्याप्यत्वेनापि ज्ञातस्य दोषत्वात् । न च धूमवानयं तदभाववत्त्वादिति त्र्याधिकम्, स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं हि व्यापकत्वम्, तच्चाभेदेऽपि धूमवानयं धूमाभाववत्तयोपलभ्यमानत्वात् तद्वत्तयानुपलभ्यमानत्वादित्यनैकान्तिकमेव ।

निषेधसाधनेऽपि त्रिविधः–प्रतियोग्युपलम्भात् साध्यव्यापकाभावोपलम्भात् साध्यव्यापकविरुद्धो-

पलम्भात । यथा निरग्निकोऽयमाग्नित्वात् धूमाभावशू-
न्यत्वात् धूमवत्त्वात् ।

( दी० ) स चायं विरुद्धो हेतुः । साध्याभावेति । तदभाव-
त्वं तद्वत्ताग्रहविरोध्यभावत्वम् , तेन साध्यवदन्यत्वव्याप्यत्वोपसं-
ग्रहः । एवमुत्तरत्रापि । साध्यव्यापकेति । अत्र व्याप्यपदं स्वरूपप-
रम् । साध्येत्यादि । साध्यव्यापकसामानाधिकरण्यग्रहविरोधिरू-
पवत्त्वादित्यर्थः । तेन साध्यव्यापकवदवृत्तित्वाद्युपसंग्रहः । सर्वत्र
चोपलम्भपदं स्वरूपसिद्धिमात्रफलकम् । साध्याभावेति । व्या-
प्यपदव्यत्यासेन साध्याभावव्यापकाभावत्वेन चेत्यर्थः । स्वम-
मानेति । तथाच साध्याभावसाध्यव्यापकाभावयोर्निरुक्तसाध्य-
व्यापकाभावत्वेनानुगमान्नाधिक्यमित्यर्थः ।

प्रतियोग्युपलम्भात्—स्वरूपतः साध्यवत्त्वग्रहविरोधित्वात्,
तेन निर्वह्निकान्यत्वादिसंग्रहः । साध्यव्यापकेति । अत्र व्यापकत्वं
भेदाभेदसाधारणं तेन साध्याभावव्याप्यत्वसंग्रहः । धूपवत्त्वा-
दिति । धूमाभावस्य वह्न्यभावव्यापकत्वग्रहदशायामस्य मध्यमे-
ऽन्तर्भावो, वह्न्यभावव्यापकवह्निसामग्र्या भावाभावव्याप्यत्वग्रहे
च चरमे ।

( गा० ) विरोधस्यैव निरुक्तत्वात् स चायमित्यस्य तत्परामर्श-
कताभ्रमं निराकरोति स चायमिति ।

साध्याभावव्याप्यत्वज्ञानवत् साध्यवद्भेदव्याप्यत्वज्ञानस्यापि
विरोधितया तदनभिधाने न्यूनतां परिजिहीर्षुः साध्याभावपदं सा-
ध्यतद्वदत्यन्तान्योन्याभावपरतया व्याचष्टे तदभावत्वमिति । साध्या-
भावव्याप्यव्याप्यत्वादिवारणायाभावपदं विरोधिताविशेषसूचकम् ।
उत्तरत्रापि-साध्यव्यापकाभावेत्यत्रापि । अन्यथा साध्यव्यापकवद्भेद-
त्वासंग्रहादिति भावः । व्यापकाभावव्याप्यत्वव्यापकविरुद्धत्वयोर-
भेदाद्द्वितीये व्याप्यपदपदार्थाविवक्षामाह व्याप्यपदमिति । विरुद्धप-
दस्य तदभावव्याप्यतद्वदवृत्त्युभयपरतामाह साध्यव्यापकेति ।

सामानाधिकरण्यविरोधित्वं तद्ग्रहप्रतिबन्धकधीविषयत्वं न तु तदधिकरणावृत्तित्वं तदभावत्वादेरपि तत्सामानाधिकरणावृत्तित्वात् व्यापकवदवृत्तीत्यादिना व्यापकाभावव्याप्यत्वपरिग्रहः । इदं च तदभावव्याप्यत्वग्रहस्य तत्समानाधिकरण्यग्रहविरोधितामंगीकृत्य विरुद्धत्वादिग्रह एव विरोधी न तु तदुपलंभग्रह इत्याशयेनोपलम्भपदानामविवक्षितार्थकतामाह सर्वत्रेति । सर्वत्र—व्यापकविरुद्धोपलंभादित्यत्राग्रिमप्रतियोग्युपलंभादित्यादौ चेत्यर्थः ।

साध्याभावतद्व्यापकाभावव्याप्यत्वेनेत्यत्र मूले व्याप्यपदार्थाविवक्षायां साध्याभावव्याप्यत्वालाभः, तद्विवक्षायां च साध्यव्यापकाभावत्वालाभः अविवक्षिततद्व्याप्यत्वलाभश्चेत्यतो व्याचष्टे साध्याभावेति । ज्ञातस्य दोषत्वादिति मूलं ज्ञातस्य विरोधित्वादित्यर्थकं, तथाच सामानाधिकरण्यग्रहविरोधिरूपाणां परिगणनीयतया न तदुपादानविरोध इति भावः । स्वव्यापकतायाः स्वसाधारण्य एव कथं साध्याभावत्वस्य कथितान्तर्भाव इत्याकांक्षायामाह दीधितौ तथा चेति ।

प्रतियोग्युपलंभपदं साध्यभूताभावप्रतियोगितावच्छेदकतद्वद्द्वतदत्यन्ताभावत्वादिसंग्राहकतया व्याचष्टे प्रतियोग्युपलम्भादीति । स्वरूपत इति । विरोधिताविशेषसूचकं साध्यव्यापकाभावत्ववारणाय । विरोधित्वात्—विरोधिज्ञानप्रकारतावच्छेदकधर्मवत्त्वात् । निर्वह्निकान्यत्वादीति । निरग्निकान्यत्ववत्त्वादीत्यर्थः । साध्यव्यापकविरुद्धोपलम्भादित्यनेन साध्याभावव्याप्यत्वोपग्रहायाह साध्यव्यापकेत्यत्रेति । धूमवत्त्वादीति । तृतीयोदाहरणस्य साध्यव्यापकाभावतया मध्यमेऽप्यन्तर्भावः सम्भवतीति दशाविशेषे व्यापकविरुद्धान्तर्भावं दर्शयति धूमाभावस्येत्यादिना । दशायामित्यनन्तरमेवकारः पूर्यः । मध्यमे—साध्यव्यापकाभावत्वज्ञानविषयतया दुष्टे, ग्रहे—ग्रहदशायां, चरमे—साध्यव्यापकविरुद्धत्वज्ञानविषयतया दुष्टे ।

**(चि०) सर्वश्चायं विशेषणद्वारापि । यथा कृष्णागुरुप्रभववह्निमानयं कटुकासुरभिपाण्डुरधूमवत्त्वात् । अयञ्च बाधाश्रयासिद्धस्वरूपासिद्धासाधारणसंकीर्णः क्वचित् ॥**

**इति विरुद्धचिन्तामणिः ॥**

( दी० ) इदं पुनरिहावधेयम् । कथितरूपाणि किं स्वरूपतो ज्ञातान्येव सामानाधिकरण्यग्रहविरोधीनि असामानाधिकरण्यव्याप्यत्वेन वा ? नाद्यः—व्यापकाभावव्याप्यत्वादेस्तदसम्भवात् । न द्वितीयः—साध्याभावव्याप्यत्वयोः स्वरूपेणैव ज्ञातयोस्तथात्वात् । तथात्वेऽपि तत्त्वमविरुद्धमिति चेत्, हन्तैवमसामानाधिकरण्यस्य समानाधिकरणावृत्तितत्तद्धर्माणाञ्च तथात्वादाधिक्यम् । न च एतानि धर्म्मिविभाजकान्येव, सर्वेषामेव साध्याभावव्याप्यत्वेनैकविधत्वादिति ।

विरोधोन्नायकप्रकारत्रैविध्येन धर्म्मिणोऽपि त्रैविध्याभिधानमिति वदन्ति । अयञ्चेत्यादि । बाधस्वरूपासिद्ध्यन्यतरसङ्करस्तु आवश्यकोऽन्यसङ्करस्तु काचित्को ज्ञानासङ्कराच्च पार्थक्यम् ।

इति विरुद्धदीधितिः ॥



( गा० ) स्वरूपतो ज्ञातान्येवेति एवकारो मध्ये योज्यः, तथाच साध्याभावव्याप्यत्वादिना अज्ञातान्यपि विरोधीनीत्यर्थः । असामानाधिकरण्यव्याप्यत्वेनेति, सावधारणमतो न वक्ष्यमाणदूषणासङ्गतिः । व्यापकाभावव्याप्यत्वादेरित्यादिना व्यापकवदवृत्तित्वपरिग्रहः । स्वरूपेणैव ज्ञातयोरिति । तदभावव्याप्यत्वेनाज्ञातयोरपीत्यर्थः । साध्याभावः साध्यसमानाधिकरण इत्यनाहार्य्यज्ञानानुत्पत्त्या धर्मितावच्छेदकतासम्बन्धेन तत्सामानाधिकरण्यप्रकारकानाहार्य्यबुद्धौ तदभावत्वादिपर्य्याप्तविषयतासम्बन्धेन ज्ञानत्वेन प्रतिबन्धकत्वादिति भावः । यथाकथंचिद्विरोधिरूपाणामेवायं विभाग इत्याशङ्कते तथात्वेपीति । स्वरूपतो विरुद्धत्वेपीत्यर्थः । तत्त्वं—विरुद्धत्वम्, अविरुद्धं—अज्ञातम् । असामानाधिकरण्यस्येति । अस्य स्वरूपत एव सामानाधिकरण्यधीविरोधित्वादिति भावः । समानाधिकरणेति । असमवः

सास्नावत्त्वादित्यादौ सास्नात्वादीनामित्यर्थः । तेषामप्यश्वत्वाद्य-सामानाधिकरण्यव्याप्यत्वेन विरोधित्वादिति भावः ।

स चायामित्यादिग्रन्थो न सामानाधिकरण्यव्याप्यत्वेन विरोधि-रूपपरिगणनपरः, किन्तु विरुद्धहेतुप्रभेदपरिगणनपर एव, एवं च साध्यासामानाधिकरण्यरूपवतां धर्मिणां साध्याभावव्याप्यत्वादिनै-वोपग्रहात्साधिक्यमिति शङ्कां निरस्यति न चैतानीति । सर्वेषां-साध्य-व्यापकाभावादीनाम् । साध्याभावव्याप्यत्वेनेति । तथा च तेषां पृथ-गुपादानानुपपत्तिरिति भावः । इदमुपलक्षणम् । एतद्ज्ञानेपीत्यादि-मूलविरोधोऽपि द्रष्टव्यः ।

विभागं सङ्गमयतां केषांचिन्मतमाह विरोधोन्नायकेति । एवं च साध्याभावव्याप्यत्वादिना ज्ञानस्य यत् दूषकत्वमभिहितं तदपि विरोधिज्ञानद्वारा न तु साक्षादिति न विरोध इति ध्येयम् । विरो-धानुमापकहेतूनामानन्त्याद्विभागानुपपत्तिस्तदवस्थैवेत्यस्वरससूच-नाय वदन्तीति ।

मूले सर्वश्चायं विशेषणद्वारापीति । उक्तनिखिलप्रकारो विरुद्धः विशेषणनिबन्धनोपीत्यर्थः । अत्र विशेषणनिबन्धनत्वस्य विरोधरूप-विशेषणे संक्रमो बोध्यः । कृष्णगुर्विति । अत्र विशेष्यधूमत्वावच्छि-न्नस्य साध्यसमानाधिकरणत्वात् कटुत्वादिविशिष्टस्यैव विरुद्धत्वा-दिति भावः । अत्र प्रत्येकविशेषणावच्छिन्नस्यैव विरुद्धता बोध्या । बाधस्वरूपासिद्ध्यन्यतरसङ्करस्यावश्यकतया कादाचित्कताभिधानं न सङ्गच्छत इत्याशङ्क्य तत्तदुभयानुगमकैतररूपावच्छिन्नसङ्करस्य का-दाचित्कत्वं विवक्षितमित्याह दीधितौ बाधेत्यादिना । ननु विरोध-स्थले दोषान्तरस्यावश्यकत्वे किमस्य दोषताभ्युपगमेनेत्यत आह ज्ञानासङ्करादिति । दोषान्तराज्ञानदशायां विरोधज्ञानेनाप्यनुमिति-प्रतिबन्धादस्य दोषान्तरत्वमावश्यकमिति भावः ॥

इति गदाधरभट्टाचार्यचक्रवर्तिविरचितायां
गादाधर्यां विरुद्धप्रकरणम् ।

श्रीगणेशायनमः ।

अथानुमानगादाधर्यां

# सत्प्रतिपक्षप्रकरणम् ।

( चि० ) सत्प्रतिपक्षत्वं न समानबलबोधितसाध्यविपर्य्ययलिङ्गत्वम्, परस्परप्रतिबन्धेनोभयोरबोधकत्वात् । बलञ्च न सपक्षसत्त्वादि, व्यतिरेकिण्यभावात् । नापि समानव्याप्तिपक्षधर्म्मतावत्त्वम्, विरोधेनैकत्र तद्भङ्गनियमात् । नापि व्याप्तिपक्षधर्म्मतया ज्ञातत्वम्, विरोधिव्याप्तिपक्षधर्म्मताविशिष्टज्ञानयोरन्यतरभ्रमत्वानियमेन नित्यत्वव्याप्तश्रावणत्वादिवैशिष्ट्याप्रसिद्ध्याऽऽरोपयितुमशक्यत्वात् । न च साध्यव्याप्यस्य पक्षधर्म्मता पक्षधर्म्मस्य वा साध्यव्याप्यतारोप्येति वाच्यम् । एकत्र तदुभयाभावात् विशिष्टस्याप्रसिद्ध्या तद्वैशिष्ट्यस्यारोपासम्भवात् । नाप्यनिर्द्धारितविशेषेण बाधितसाध्यविपर्य्ययकत्वम्, उभयोरबोधकत्वात् । विशेषश्च न व्याप्तिभङ्गाभङ्गरूपः एकत्र तद्भङ्गनियमात् ।

( दी० ) एकत्र तदुभय इति । व्याप्ये पक्षधर्म्मतायाः पक्षधर्मे च व्याप्यत्वस्यारोपः प्रत्येकमव्यापकोऽतो विशिष्टस्यारोपो वाच्यः, स चैकधर्मिणि विरोधिव्याप्यद्वयविरहाद्विशिष्टस्याप्रसिद्ध्या न सम्भवतीत्यर्थः । विरुद्धादौ साधने स्वव्यापकसामानाधिकरण्यरूपव्याप्तेरप्रसिद्धेश्चेत्यपि द्रष्टव्यम् । एकत्र भङ्गेति । तथा चान्यतरत्वेन तदवधारणमस्तीति भावः ।

( गा० ) समानबलेत्यादिमूलस्य प्रकृतसाध्यानुमापकबलशालित्वे सति प्रकृतसाध्याभावानुमापकबलशालिहेत्वन्तरकत्वमित्यर्थः। अत्रानुमापकत्वमनुमितिफलोपहितत्वमनुमितिस्वरूपयोग्यत्वं वा ? आद्ये दूषणमाह परस्परेति । उभयोः-व्याप्तिसहितपक्षधर्मयोः । अबोधकत्वादित्यस्य सत्प्रतिपक्षतादशायामित्यादिः । द्वितीयपक्षे एतद्दोषानवकाशात् बलपदार्थं वितर्क्य दूषयति-बलं चेति । बलपदार्थश्चेत्यर्थः । सपक्षसत्त्वादीति । आदिना पक्षसत्त्वविपक्षासत्त्वयोः परिग्रहः। व्यतिरेकिणीति । अभावात्-सपक्षाप्रसिद्ध्या तत्सत्त्वासम्भवात् । एतदुपलक्षणम् । सर्वत्रैव सत्प्रतिपक्षे एकहेतौ पक्षसत्त्वविपक्षासत्त्वयोरेकतराभावोऽपि द्रष्टव्यः । समानेति सम्पातायातम् । बलपदार्थस्य समानत्वाघटितत्वात् । विरोधेनेति । विरुद्धसाध्यतदभावव्याप्ययोरेकत्रासत्त्वनियमेनेत्यर्थः । तद्वत्त्वेति । व्याप्तिपक्षधर्मतयोरेकतराभाव इत्यर्थः । व्याप्तिपक्षधर्मतया-व्याप्तिसहितपक्षधर्मतया, ज्ञातत्वं-ज्ञायमानत्वं, व्याप्तिविशिष्टत्ववैशिष्ट्यज्ञानविषयकत्वमित्यर्थः । तेन 'नित्यत्वव्याप्यश्रावणत्वादिवैशिष्ट्याप्रसिद्धे'रित्याद्यग्रिममूलसङ्गतिः। नित्यत्वव्याप्येति । शब्दो नित्यः कृतकत्वादित्यादौ श्रावणत्वादिरूपप्रतिहेतौ भ्रमात्मकव्याप्यत्वज्ञानस्यारोप्याप्रसिद्ध्यासम्भवेन समानबलत्वासम्भवादित्यर्थः ।

यत्राव्याप्यः प्रतिहेतुः तत्र पक्षधर्मे श्रावणत्वे अन्यत्र प्रसिद्धायाः व्याप्तेरारोप एव बलम् , यत्रापक्षधर्मः प्रतिहेतुः तत्र साध्यव्याप्ये पक्षधर्मत्वारोप एव बलमिति शङ्कायां विशिष्टाप्रसिद्ध्या व्याप्तिविशिष्टपक्षधर्मत्वारोपासम्भवाभिधानमसङ्गतमित्यत आशयं पूरयति दीधितौ व्याप्य इत्यादिना। व्याप्ये-व्याप्तिविशिष्टे, पक्षधर्मे-पक्षधर्मताविशिष्टे, प्रत्येकं व्याप्तिविशिष्टत्वविषयकपक्षधर्मताज्ञानत्वादिना, अव्यापकः-सकलसत्प्रतिपक्षासंग्राहकः,अव्याप्यादिप्रतिपक्षस्य व्याप्त्यादिविशिष्टत्वाप्रसिद्धेरिति भावः । विशिष्टारोपः-व्याप्तिविशिष्टपक्षधर्मतायाः स्वस्मिन्ग्रहः, वाच्यः-बलपदेन विवक्षणीयः। एकधर्मिणीत्यादिकर्मकत्रेत्यादिमूलशब्दविवरणम । विशिष्टस्येति। यादृशसाध्यं पक्षे बाधितं तादृशव्याप्तिविशिष्टप्रकृतपक्षवृत्तित्वस्याप्रसिद्ध्या न सम्भवतीति, तथाच नित्यत्वादिव्याप्तिविशिष्टश्रावणत्वाद्यप्रसिद्ध्या यथा व्याप्तिविशिष्टतद्धेतुधर्मिकपक्षधर्मताग्रहोऽप्रसिद्धस्तथा नित्यत्वादिव्या-

तिविशिष्टशब्दवृत्तित्वाद्यप्रसिद्ध्या श्रावणत्वादौ तद्ग्रहोऽप्यप्रसिद्ध इति श्रावणत्वादेः समानबलत्वासम्भवेन कृतकत्वादेस्सत्प्रतिपक्षतानुपपत्तिरिति भावः ।

व्याप्तिपक्षधर्मतोभयज्ञानविषयताया बलत्वे नैष दोष इत्यतो दोषान्तरं स्वयमाह विरुद्धादाविति । आदिना साधारणपरिग्रहः । साध्याभाववदवृत्तित्वरूपाया व्याप्तेरन्यत्रप्रसिद्धाया विरुद्धादावप्यारोपसम्भवात् । स्वव्यापकेत्यादि । अप्रसिद्धश्चेति । तज्ज्ञानघटितसमानबलत्वासम्भवे इति शेषः । व्याप्तिप्रकारेण पक्षे स्वप्रकारकज्ञानविवक्षणे सामान्यादौ पक्षे समवायादिरूपहेतुतावच्छेकसम्बन्धेन वृत्तेरप्रसिद्धिर्न क्षतिमावहतीति साऽप्रसिद्धिर्नोक्ता व्याप्तिघटकानां तादृशपदार्थानां खण्डशः प्रसिद्धानां परस्परोपश्लेषावगाहिज्ञानस्य बलतया विवक्षणेन तद्दोषोद्धारसम्भवेऽपि अन्वयव्यतिरेकव्याप्तिज्ञानयोरननुगमेनेकोपादानेऽन्यत्राव्याप्तिर्दुर्धरैवेति भावः । साध्यवत्ताज्ञानविरोध्यनुमितिसमर्थत्वेनानुगमे तु सिद्धान्त एव पर्यवसानम् ॥

व्याप्तिभङ्गाभङ्ग इति मूलं व्याप्तिपक्षधर्मताप्रमितिविषयत्वतद्भ्रमविषयत्वान्यतररूप इत्यर्थकम् ,एकतरविषयकव्याप्तिपक्षधर्मताज्ञानस्य भ्रमत्वनियमेऽपि तदनवधारणेनानिर्धारितविशेषत्वसम्भवादेकत्र तद्भङ्गनियमादिति दूषणमसङ्गतमित्यत आह तथा चेति । तादृशभङ्गनियमे चेत्यर्थः । तदवधारणं-भङ्गावधारणम् । अनयोरेकतरं बाध्यं विरुद्धार्थप्रतिपादकत्वादित्यनुमानात्सत्प्रतिपक्षतादशायामप्यस्तीत्यर्थः । यद्यपि अनयोरेकतरमित्यादेः एकत्र पक्षे साध्यतदभावव्याप्यतया[1] हेतुद्वयज्ञानान्यतरद्भ्रमः एकत्र मिथो विरुद्धद्वयसाधकद्वयान्यतरत्वादित्यर्थो न साधु-सद्धेतुपरामर्शेऽप्यन्यतरत्वहेतुसत्त्वेन भ्रमत्वस्याभावेन व्यभिचारात् । न चैकपक्षकहेतुप्रतिहेतुपरामर्शान्यतरत्वं पक्षीकृत्य विरोधिसाधकद्वयवृत्तित्वेन भ्रमवृत्तित्वमेवानुमेयं तादृशान्यतरत्वाश्रये एकत्र भ्रमत्वसत्त्वेनैव तत्र भ्रमवृत्तित्वसत्त्वेन न व्यभिचारप्रसक्तिरिति वाच्यम् । तथासत्यपि घटादिविषयकसमूहालम्बनरूपो यत्र परामर्शस्तत्र घटाद्यंशे भ्रमत्वमादायार्थान्तरवारणाय तत्तद्धेतौ तत्तत्साध्यव्याप्तिपक्षधर्मतान्यतरभ्रमस्य निवेशनीयतया तत्तद्धेतुद्वयान्तर्गतसद्धेतौ तत्तत्साध्यादिव्याप्तिभ्रमाप्रसिद्ध्या साद्ध्याप्रसिद्धेः । तत्तद्धेतुद्वयान्यतरांशे तत्तत्साध्यव्याप्तिपक्षधर्मता-

न्यतरभ्रमवृत्तित्वसाधने च विरुद्धार्थसाधकान्यहेतुकपरामर्शद्वयान्यतरत्वे व्यभिचारः साध्यप्रसिद्धिमात्रेणैव कृतकृत्यता च । तथापि तत्तत्साध्यतदभावव्याप्यवच्छिन्नपक्षधर्मतानिरूपितहेतुविषयताद्वयान्यतरत्वं पक्षीकृत्य भ्रमत्वानयतविषयतावृत्तित्वमेकधर्मिकाविरुद्धानुमितिजनकतावच्छेदकविषयताद्वयवृत्तित्वेन साधनीयम् । भ्रमत्वं चानुगतं कथंचिन्निर्वचनीयम् ॥

इति सत्प्रतिपक्षपूर्वपक्षग्रन्थः ॥

**( चिं० ) उच्यते । साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यलिङ्गत्वं तत्त्वम् । बलञ्च व्याप्तिपक्षधर्म्मते । विरोधिबोधकान्यगमकतौपयिकरूपसम्पत्तिमत्तया ज्ञायमानेन प्रतिरुद्धकार्यत्वं वा तत्त्वम् ।**

( दी० ) सत्प्रतिपक्षितव्यवहारो हि सत्यसति वा साधने नापरामृश्यमाणे नाप्यविद्यमानविरोधिपरामर्शे, अत एव सन् प्रतिपक्षो विरोधिव्याप्त्यादिमत्तया परामृश्यमाणो हेतुः विरोधिपरामर्शो वा यस्य परामृश्यमाणस्य हेतोरसौ सत्प्रतिपक्ष इति विग्रहमपि वर्णयन्ति, अतस्तदनुसारेणैव व्यवहारौपयिकं लक्षणमाह साध्येति । बाधाश्रयासिद्धिनिर्णयवारणाय समर्थान्तम् । न चासौ न व्याप्तिपक्षधर्म्मतात्मकबलोपस्थितिरिति वाच्यम् । व्याप्तिपक्षधर्म्मताविरहस्य साध्यत्वे पक्षतावच्छेदकत्वे वा तत्सम्भवात् । पक्षः साध्याभावव्याप्यवान् साध्यं पक्षवृत्तित्वाभावव्याप्यवदिति पक्षस्य, व्यापकभेदेन अन्वयव्यतिरेकभेदेन च व्याप्तेश्च भिन्नत्वादेकोपादानेऽन्यसंग्रहेण बलस्याविवक्षितत्वाच्च । साध्यधीविरोध्यनुमितिजनकज्ञानाविषयत्वेन तदुपादाय तदुपस्थित्यभिधानञ्च शिरोवेष्टनेन नासिकास्पर्शमनुधावति । साध्यस्य साध्यसिद्धेर्विरोधिन्याः पक्षो न साध्यवानित्याद्युपस्थितेः, सा-

ध्यविरोधी साध्यवत्ताज्ञानप्रतिबन्धकज्ञानविषयो बाधः साध्याभावादिस्तदुपस्थितेर्वा जननयोग्यतया समानया बलोपस्थित्या तथाविधव्याप्त्यादिबुद्ध्या प्रतिरुद्धं कार्य्यं यस्य तादृशलिङ्गत्वमित्यर्थः। विरोधिव्याप्त्यादिविषयत्वलक्षणयोग्यताशालिन्या अप्युपस्थितेरप्रामाण्यग्रहे सत्प्रतिपक्षत्वासम्पादकत्वात् कार्य्यप्रतिरोधानुधावनम्। समानत्वञ्चागृहीताप्रामाण्यकसाध्यसिद्ध्यौपयिकपरामर्शकालीनत्वम्। असति गृहीताप्रामाण्यके वा परामर्शे सत्प्रतिपक्षितत्वव्यवहारविरहात्।

( गा० ) उच्यते इत्यादि ग्रन्थस्य दोषनिर्वचनपरत्वं न सम्भवति साध्यविरोध्युपस्थानेत्यादेर्ज्ञानस्य ग्राह्यभावाद्यनवगाहितयाऽनुमित्यप्रतिबन्धकतया तस्य हेत्वाभासत्वासंभवादिति सत्प्रतिपक्षनिर्वचनपरतया व्याख्यातुकामो व्यवहारविषयमवधारयति सत्प्रतिपक्षितेति। सत्यसति वेति। समीचीने ऽसमीचीने वेत्यर्थः। तथाच सङ्केतावुक्तलक्षणस्यातिप्रसंगो दशाविशेषे न दूषणावह इति भावः। अपरामृश्यमाण इति। प्रकृतसाध्यसिद्ध्यौपयिकस्वविषयकपरामर्शदशानवच्छिन्न इत्यर्थः। एतेन साध्यसिद्ध्यौपयिकपरामर्शकालीनत्वरूपसमानत्वनिवेशसार्थक्यं दर्शितम्। असति गृहीताप्रामाण्यके च परामर्शे सत्प्रतिपक्षव्यवहारविरहादित्यग्रिमग्रन्थश्चासतीत्यस्य दृष्टान्तविधया प्रदर्शनेन गृहीताप्रामण्यकत्वांशमात्रव्यावृत्तिप्रदर्शनपर इति न पौनरुक्त्यम्। अविद्यमाने विरोधिपरामर्शे इति। विरोध्यनुमितियोग्यपरामर्शदशानवच्छिन्न इत्यर्थः। एतेन बलोपस्थितिप्रतिरुद्धकार्यकत्वांशनिवेशप्रयोजनं दर्शितम्। अतएवेति। प्रकृतपरामर्शस्य विरोधिपरामर्शस्य चासत्त्वदशायां सत्प्रतिपक्षव्यवहारविरहादेवेत्यर्थः। अतीतानागतप्रतिहेतुपरामर्शदशायामपि सत्प्रतिपक्षत्वात्प्रतिपक्षपदस्य हेतुपरतापक्षं परित्यज्य परामर्शपरतामाह विरोधिपरामर्शेति। परामृश्यमाणस्येति। यद्यप्यन्यपदार्थे परामृश्यमाणत्वं न शब्दतो लभ्यते तथापि प्रतिपक्षपदस्यैव फलोन्मुखस्वकार्यप्रतिरोधकपरतया परामृश्यमाणस्वकार्यानुमितिविरोधिपरामर्शपरत्वात् फलितार्थविवरणमिदम्। तदनुसारेण—तादृशव्यवहारानु-

सारेण। बाधाश्रयासिद्धिवारणायेति। तद्दशायामतिव्याप्तिवारणायेत्यर्थः। तयोरपि साक्षादनुमितिप्रतिबन्धकत्वादिति भावः। न बाश्रयासिद्ध्यादिनिर्णयस्यानुमितिप्रतिबन्धकत्वेऽपि तस्य परामर्शेनापि समं विरोधात्परामर्शकाले तत्समवधानं दुर्घटमिति वाच्यम्। लौकिकसन्निकर्षादेव तत्सम्भवात्। आश्रयासिद्धिपदं साध्याप्रसिद्ध्यादेरप्युपलक्षणम्। बलपदेनैव तद्वारणात् समर्थान्तवैयर्थ्यमित्याशंकां निराकरोति न चासावित्यादिना। असौ—बाधादिनिर्णयः। व्याप्तीति। धूमो वह्निव्याप्तिविशिष्टपर्वतवृत्तित्वाभाववान् पर्वताद्यवृत्तित्वात् तादृशाभाववान्धूमो गुणवान् द्रव्यत्वादित्यादौ धूमादेर्वह्न्यादिव्याप्तिविशिष्टपक्षधर्मताभावनिश्चयरूपबाधाश्रयासिद्धिनिर्णयस्य व्याप्तिपक्षधर्मतात्मकबलोपस्थितित्वसम्भवादिति भावः। ननु बलपदं प्रकृतसाध्याभावव्याप्तिविशिष्टप्रकृतपक्षधर्मतापरमिति नायं दोषः प्रकृत वन्हिव्याप्तिविशिष्टपर्वतवृत्तित्वव्याप्तिविशिष्टधूमवृत्तितायाः एव बलत्वादित्यत आह पक्ष इति। इतीत्यस्य प्रतिरोधकज्ञानविषयस्येति शेषः। पक्षस्य व्याप्तेश्च भिन्नत्वादित्यर्थः। प्रथमे प्रकृतपक्षस्य द्वितीये प्रकृतसाध्यस्य पक्षतया पक्षभेदः। व्याप्तेर्भेदकद्वयमाह व्यापकेत्यादि। व्यापकभेदेनेति। व्यापकयोः साध्याभावपक्षवृत्तित्वाभावयोर्भेदेनेत्यर्थः। अन्वयव्यतिरेकभेदेनेति। एकसाध्यगमकव्याप्तेरप्यन्वयव्यतिरेकरूपनिरूपकभेदेनेत्यर्थः। अविवक्षितत्वात्—विवक्षितुमशक्यत्वात्। नन्वनुगतरूपेण सकलव्याप्तिपक्षधर्मतानिवेशे नायं दोष इत्यत आह साध्येति। शिरोवेष्टनेनेति। तादृशानुमितिजनकज्ञानत्वेन प्रतिरोधकज्ञानस्यैव निवेशात्तद्विषयकत्वेन पुनस्तन्निवेशोऽनुचित इत्यर्थः। तथाच विरोध्युपस्थापनसमर्थत्वेनैवोपस्थितिनिवेशो युक्त इति भावः। उपस्थितविरोधित्वं प्रतिबन्धकत्वं तच्च न साध्यनिरूपितमिति साध्यपदन्तदनुमितिपरतया व्याचष्टे साध्येत्यादि। इत्याद्युपस्थितेरित्यादिना साध्यं पक्षावृत्तीत्यादि उपस्थितिपरिग्रहः। उपस्थापनेत्यत्र धात्वर्थोपस्थितौ विरोध्यन्तस्य स्तोकं नमेत्यादौ नमने स्तोकस्येवाभेदान्वयः प्रयत्नतोपपाद्यः, एतदस्वरसेन साध्यपदस्य मुख्यार्थपरत्वानुरोधेन च कल्पान्तरमाह साध्यविरोधीति। तद्वत्ताज्ञानप्रतिबन्धकज्ञानविषयत्वस्यैव विषयविरोधिरूपत्वात्साध्यवत्ताज्ञानविषय इति विवरणसङ्गतिः।

